**निर्बर्हणेन दान्तेन कामैरनागर्द्धितमनसाऽऽत्मतत्त्वस्य सुप्रत्ययत्वात्। यदि खलु कामनिबर्हणानि कर्म्माणि तैश्च कृती न प्रयोजनान्तरमपेक्षते कामी। तथा च तत्पर एव कर्म्मविधिरिति नान्यपरत्वे प्रमाणम्। न चाऽशास्त्रत्वम्। श्रेयोऽभिधायकत्वात्। श्रेयसः प्रीतिरूपत्वात्, प्रीतेश्च कामेषु प्रत्यात्मसंवेद्यत्वात्। न च भोगो निबर्हणम्। न हि कामानां तृप्तिरस्ति। अथ प्रवृत्त्यन्तरनिवृत्त्या, तत्रापि यदि कामी यागेन कुर्य्यान्नाऽन्येनोपायेन कामं को विशेषः कामपक्षे चेतसः कामनिवृत्ताया प्रवृत्तौ कथं च पक्षेऽप्यप्राप्तविधावन्यनिवृत्तिः[1] ?। अथ कामी यागं कुर्य्यान्न कामम्? दुर्ल्लभमर्थद्वयम-**

पहारेण तदुपभोजकतया, आहोस्वित्प्रवृत्त्यन्तरोपदेशेन स्वाभाविकीभ्यः प्रवृत्तिभ्यो निवर्तनेन? न तावदाद्यः कल्प इत्याह—यदि खलु कामनिर्बर्हणानि तदुपभोजकतया तैरेव कर्मभिः कृतकामैः कृती पुरुष इति न प्रयोजनान्तरमपेक्षते। अनाकाङ्क्षितं च न विधिना स्वीक्रियत इति। तथा च तत्पर एव स्ववाक्योपात्तकर्मपर एव कर्मविधिरिति अन्यपरत्वे प्रमाणं कामनाऽनपेक्षित्वात्। अस्य च तद्वैपरीत्यात्।

तदुक्तं कामनापरत्वे शास्त्रव्यापत्तिरिति, तत्राह—न चाऽशास्त्रत्वम्। कुतः? श्रेयोऽभिधायकः पदसमूहः शास्त्रमिति वृद्धाः। कामविषयश्च तथेत्याह—श्रेयोऽभिधायकेत्वात् नन्वापातत एव कमनीयानामनर्थपरिणामानां केन श्रेयः स्वभावतेत्यत आह—श्रेयसः प्रीतिरूपत्वात्। श्रेयो हि पुरुषप्रीतिरिति लौकिकी प्रतीतिस्तदुपदेशः शास्त्रमिति लौकिकमेव। न चैते पर्यनुयोगिनः, येन न कामलोभमाद्रियेरन्। कामास्तु पशुस्वर्गादयो न प्रीत्यात्मान इत्याह—प्रीतेश्च कामेषु प्रत्यात्मसंवेद्यत्वात्। न च भोगो निवर्हणं संभवति। न हि कामानां स्वर्गादीनां तृप्तिरस्ति पुरुषस्य। कामानामिति सुहितार्थयोगे षष्ठी। तदुक्तं 'न जातु कामः कामानामुपभोगेन शाम्यती'ति। 'भोगाऽभ्यासमनुविवर्धन्ते रागाः कौशलानि चेन्द्रियाणा'मिति च। द्वितीयं कल्पमनुभाषते—अथ प्रवृत्त्यन्तरनिवृत्त्या। दूषयति—तत्रापि यदि कामी यागेन कुर्यान्नाऽन्येनोपायेन कामं को विशेषः कामाक्षेपे चेतसः कामनिवृत्तायां प्रवृत्तौ? कथं च पक्षेण प्राप्तविधावन्यनिवृत्तिः[1]? न तावत्कामिनो विधेः पूर्वं कामोपायान्यागादिभेदानङ्गभेदप्रचयसाधनोपरागानधिगन्तुमीशते लौकिकानिव तुषविमोकादिहेतूनवघातादीन्, येन तेषां लौकिकैः कामोपायै-

---

१. निवृत्तिप्रतीतिः—मू० पु०।

**विशेषतः श्रौतलाक्षणिकादिकम्[1]। यागविधिपरत्वे न कामनिषेधः। कामनिषेधपरत्वे न यागविधिः। अर्थात्कामनिवृत्तिरुभयस्यापि असमवायात्[2]। सर्वदृष्टार्थप्रवृत्तिविरोधे च कर्म्मविधिकृते ऽप्यपार्थकाः स्युः। दृष्टोपायसाध्यत्वात्तदर्थस्य। स्वाभाविकत्वाच्च फलोपभोगस्य स्वभाववाद एवाऽऽम्नायार्थश्छद्मना[3] ऽऽश्रितः स्यात्। तस्मान्महद्दण्डपदमिदं दृष्टेनैव कर्म्मविधय आत्मज्ञानाधिकारमारोहन्तीति। नियोज्याऽनुशासनं शास्त्रस्येति ज्ञाननियोगोऽपि नियोज्याऽनुशासनमात्रमिति न तत आत्मप्रतिपत्तिः।**

विकल्पे सत्यवघातादिवत्पक्षे प्राप्तिः स्यात्। अभ्युपेत्य पक्षे प्राप्तिमेतदुक्तमिति मन्तव्यम्। अथ तु न कामसाधनतया यागो विधीयतेऽपि तु कामेभ्यो निवर्तयितुं कामिनं यागं कुर्यादित्येतावन्मात्रमित्याह—अथ कामी यागं कुर्यान्न कामम्। उत्तरम्—दुर्लभमर्थद्वयं विशेषतः श्रौतलाक्षणिकादिकम्। यागं कुर्यादिति श्रौते संभवति, न कामनिवृत्तिर्लाक्षणिकी युक्ताऽश्रयितुमित्यर्थः। अथ शक्यतामेव दर्शयति—यागविधिपरत्वे न कामनिषेधः, कामनिषेधपरत्वे न यागविधिः। पीनो दिवा न भुङ्क्ते इति भोजननिषेधपरे वाक्ये ऽर्थादस्य भोजनं दोषा विहितं भवति तथेहाप्यर्थात्कामनिवृत्तिः। कुतः ? इह द्वयस्याप्यसमवायात्। पीनस्य दिवा भोजननिषेधो रात्रावभोजने दिवा भोजननिषेधो रात्रावभोजनेन सह न सम्भवतीत्यर्थाद्दोषा भुङ्क्ते इत्यवगम्यते। न पुनर्यागादयः कामनिवृत्तायां प्रवृत्तौ न संभवन्तीत्यर्थः। भवतु वोभयपरत्वं तथापि यागादिविधिभिः सर्वा एव दृष्टार्थाः प्रवृत्तय उपरुद्धा इति तत्साध्यानां व्रीह्यादीनामसंभवाद्यागादयो ऽपि न निवर्तेरन्साधनाभावादित्याह—सर्वदृष्टार्थप्रवृत्तिनिरोधे च कर्मविधिकृते ऽप्यपार्थकाः स्युर्दृष्टोपायसाध्यत्वात्तदर्थस्य यागादेः। अपि च यागादीनामफलसाधनत्वे सेवादेश्च व्यभिचारादहेतुः[4] सुखदुःखादिरेव स्वाभाविकलौकायतिकाऽभ्युपगताम्नायार्थ इति वचनव्यक्त्यन्तरेणाऽभ्युपगतं भवतीत्याह—स्वाभाविकत्वाच्च फलभोगस्य स्वभाववाद एवाऽर्थादाम्नायार्थच्छद्मनाऽऽश्रितः स्यात्। उपसंहरति—तस्मान्महद्दण्डपदमिदं दृष्टेनैव कर्मविधय आत्मज्ञानाऽधिकारमधिरोहन्तीति। अपि चाऽधिकाराऽनभ्युपगमे नियोज्याऽनुशासनं शास्त्रत्वं शास्त्रस्य यागादिविधेरिति तेनैव न्यायेन ज्ञाननियोगोऽपि नियोज्याऽनुशासनमात्मज्ञानं कर्तव्यमित्येतावन्मात्रविधानपरमिति। तस्मात्फलं नाऽऽत्मप्रतिपत्तिरभिव्याप्तिः स्यात्।

---

१. लाक्षणिकात्मकम्—मू० पु० पा०। २. उभयस्यापि असंभवात्—मू०पु०पा०।
३. अर्थः शब्देन मू० पु०। ४. चारहे० पु० पा०।

**ज्ञानस्वभावादिति चेत् ? । विधिवैयर्थ्यात् । अवहन्त्यादिवदिति चेत् ? न नियमार्थत्वात् । न ज्ञानविशेषनियमः । पक्षेऽप्यप्राप्तेः । समारोपेण च सम्भवात् न तत्त्वपरिच्छेदः । तस्मान्नाऽसाधने धात्वर्थे ऽधिकारसिद्धिः । साधनत्वं चास्य विधिरित्युक्तम् ॥**

**इति श्रीमहामहोपाध्यायमण्डनमिश्रविरचितो**
**विधिविवेकः समाप्तः ॥**

शङ्कते—ज्ञानस्वभावादिति चेत् । निराकरोति—विधिवैयर्थ्यात् । पुनः शङ्कते—अवहन्त्यादिवदिति चेत् । निराचष्टे—न, नियमार्थत्वादवहन्त्यादिविधेः । यद्युच्येत इहाप्यात्माऽवगतावात्मज्ञानं नियम्यत इति, तत्राह—न ज्ञानविशेषनियमः । कुतः ? पक्षेऽप्यप्राप्तेर्ज्ञानानन्तरं न खल्वात्मज्ञानादात्मप्रतीतिसंभवः । आत्मज्ञाने च विधेये विपरीतस्याप्यात्मज्ञानत्वात्तस्यापि विधेयत्वसंभवान्न तत्त्वपरिच्छेदः स्यादित्याह—समारोपेण संभवान्न तत्त्वपरिच्छेदः । उपसंहरति—तस्मान्नाऽसाधने धात्वर्थे ऽधिकारसिद्धिः[1] । भवतु फलसाधनं धात्वर्थः, सिध्यतु चाऽधिकारः, तथापि किमायातं विधावित्यत आह—साधनत्वं चाऽस्य विधिरित्युक्तम ॥

**इत्याचार्यवाचस्पतिमिश्रविरचिता विधिविवेकटीका**
**न्यायकणिका समाप्ता ॥**

---

१. न साधने धात्वर्थाऽधिकाराऽसिद्धिः—मू० पु० पा० ।